त्तिरिति तत्र सौभराणां भेद एव । अतश्च विजातीये सौभरे हीषः पक्षेऽप्यप्राप्तत्वात्तस्य हीषादिनियमविषयत्वायोगेन न तस्य परम्परासम्बन्धघटकत्वम् । ततश्च वृष्टौ हीषेव विजातीय-सौभरद्वारा कुर्यादित्येतद्वाक्यार्थः फलितो भवति । एवञ्च वृष्ट्य-र्थसौभरविधावपि विजातीयानां सौभराणां विकल्पेन वृष्ट्यर्थं प्राप्तानां हीषूनिधनकस्यैव सौभरविशेषस्य वृष्टिसाधनता नाऽन्येषामित्यपि नियमः फलितो भवति । न ह्यन्यथा वृष्टौ हीषेवेति नियमः कथमपि सम्पादयितुं शक्यः, निधनान्तरयुक्तस्यापि सौभरान्तरस्य तदर्थं क्रियमाणत्वात् । अतो हीषूनियमविधेः समानजातीयसौभरस्थले शाखान्तरायोगादिनिधनान्तरव्यावृत्तिफलकत्वेऽपि हीषाभिन्ननिधनयुक्तविजातीयसौभरस्थले तस्य वृष्ट्यर्थताव्यावृत्तिफलकत्वमपि कांस्यभोजिन्यायेन न विरुध्यते ।

अत एव यत्र न कांस्यभोजिन्यायः, यथा कारीर्यादौ, तत्र न तस्य वृष्ट्यर्थता व्यावर्त्यते, वृष्ट्यर्थसौभरविधेस्तु हीषूनिधनकसौभरमात्रग्रहणेन चारितार्थ्यात् युक्ता विजातीयसौभरव्यावृत्तिफलकनियमफलकतेति विशेषः । अतः सौभरा-[...]स्याऽपि नित्यनैमित्तिकप्रयोगविषयत्वमेव, न तु काम्यप्रयोग-[...]त्वमित्यपि द्रष्टव्यम् । अतः सिद्धं हीषादिविधौ विधि-[...]ानुरोधेनैव न गुणफलसम्बन्धः, न वा तदर्थं गुणाम्नानभेद इति ।

प्रयोजनं—पूर्वपक्षे वृष्ट्यर्थं सर्वसौभरानुष्ठानेऽपि अन्नाद्यार्थमूर्गादिनिधनानुष्ठानं वृष्ट्यन्तरार्थं वा हीष एवाऽनुष्ठानम्, सिद्धान्ते तु नेत्यादि स्पष्टम् ।

सूत्रं तु—सर्वस्य सौभरस्योक्तकामत्वेन ·मस्याभिधाना·

स्मिन् द्वारभूते सत्येव हीषादेः कामश्रुतिस्स्यात्। न चैवं सौभभरे हीषादेः पाठादेव प्राप्तत्वात् विधानानर्थक्यम्, वृष्टिसाधनीभूतविजातीयसौभरवृत्तिनिधनव्यवस्थार्थत्वेन पुनःश्रुतिसार्थक्यादित्येव व्याख्येयम् ॥

मीमांसाम्बुनिधिं प्रमथ्य सुदृढैर्न्यायोच्चयैर्निर्झरैः
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम् ।
यद्धालाहलसंज्ञमेव कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः ॥

श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य ।
मीमांसाकौस्तुभाख्या भेदाध्याये द्वितीयोऽङ्घ्रिः ॥

इति श्रीमत्पूर्वोत्तरमीमांसापारावारपारीणधुरीणश्रीरुद्रदेवसूनु-
खण्डदेवविरचितमीमांसाकौस्तुभे द्वितीयाध्यायस्य
द्वितीयः पादः ॥ २ ॥

